# भवानी सहस्रनाम स्तोत्रम्

## पंचस्थवी तथा आरतियों सहित

जय माता दी



-प्रकाशक-

## धार्मिक पुस्तक भंडार

रघुनाथ मंदिर गेट जम्मू ( कश्मीर )

संसकरण ] | [ मूल्य ·७५ पैसा

# श्री भवानीसहस्रनामस्तोत्रम्

जय ... मात ... दी

ॐ नमो भवान्यै ॥ अरिशङ्खकृपाणखेटबाणान्
सुधनुः शूलकतर्जनीदधाना । भवतां महिषोत्तमा-
ङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ ॐ शङ्ख-
त्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशुकलया
विलसत्किरीटाम् । सिंहस्थितामसुरसिद्धनतां च दुर्गां
दूर्वानिभां निखिलदुःखहरां नमामि ॥ २ ॥ अवुल
वुलपतन्ती चक्रमध्ये स्फुरंती । मधुरमधुपिबन्ती
कंटकान्भक्षयंती ॥ दुरितमपहरंती साधकान्पोषयंती
जयति जयति देवी सुदंरी क्रीडयंती ॥३॥ चतुर्भु
जामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् ॥ खड्गशक्तिधरां देवीं
वरदाभयपाणिकाम् ॥४॥ प्रेतसंस्थां महारौद्रीं भुजगे-
नोपवीतिनीं ॥ भवानीं कालसंहारबद्धमुद्रा
विभूषिताम् ॥५॥ जगत् स्थितिकरीं ब्रह्मविष्णु-
रुद्रादिभिः सुरैः ॥ स्तुतां तां परमेशानीं नौम्यहं

विघ्नहारिणीम् ॥६॥ ॐ नमो भवान्यै ॥ कैलास शिखरे रम्ये देवदेवं महेश्वरम् ॥ ध्यानोपरत- मासीनं प्रसन्नमुखपङ्कजम् ॥७॥ सुरासुर शिरोरत्न रञ्जितांघ्रियुगं प्रभुम् । प्रणम्य शिरसा नन्दी बद्धा- ञ्जलिरभाषत ॥८॥ श्रीनन्दिकेश्वर उवाच ॥ देवदेव जगन्नाथ संशयोऽस्तिमहान्मम । रहस्यमेकं प्रष्टुं त्वां कृपया भक्तवत्सल॥९॥देवतायास्त्वयाकस्याः स्तोत्र- मेतद्दिवानिशम् । पठ्यतेऽविरतं नाथ त्वत्तः किमपरः परः ॥१०॥ इति पृष्टस्तदा देवो नन्दिकेन जग- द्गुरुः । प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः॥११ श्री भगवानुवाच ॥ साधुसाधु गणश्रेष्ठ पृष्टवानसि मां च यत् । स्कन्दस्यापि यद्गोप्यं रहस्यं कथयामि तत् ॥ २१ ॥ पुराकल्पक्षये लोकान् सिसृक्षुर्मूढ चेतना । गुणत्रमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥ १३ ॥ तस्यामहं समुत्पन्नस्तत्वैस्तैर्महदादिभिः । चेतनेति ततः शक्तिर्मां काप्यालिंग्यतस्थुषी ॥१४॥ हेतुसंकल्पजालस्य मनोऽधिष्ठायिनीशुभा । इच्छेति

परमाशक्तिरुन्मीलित ततः परम् ।। १५ ।। ततो वागिति विख्याता शक्तिः शब्दमयीपरा । प्रादुरासी ञ्जगन्माता वेदमाता सरस्वती ॥१६॥ ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा सिद्धिदाबुद्धिदा शांता सर्वमंगलदायिनी ॥१७॥ तयैतत् सृज्यते विश्वमनाधारञ्चधार्यते । तयैतत् पाल्यते सर्वं तस्यामेव प्रलीयते ॥१८॥ अर्चिता प्रणता ध्याता सर्वभावविनिश्चिता । आराधिता स्तुताचैव सर्वसिद्धि प्रदायिनी ॥१९॥ तस्यानुग्रहादेव तामेवस्तुतवानहम् । सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः ॥२०॥स्तवेनानेन संतुष्टा मामेव प्राविवेश सा । तदारभ्य मयाप्राप्तमैश्वर्यं पदमुत्तमम् ॥२१॥ तद् प्रभावान्मयासृष्टं जगदेतच्चराचरम् । ससुरासुरगंधर्व यक्षराक्षसमानवम् ॥२२॥ ससपन्नगं समुद्रं सशैलवनकाननम् । सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् ॥ २३ ॥ नन्दिन् नाम सहस्रेण स्तवेनानेन सर्वदा । स्तौमिपरापरां शक्तिं ममानुग्रहकारिणीम्२४

इत्युक्त्वोपरतं देवं चराचरगुरुं विभुं। प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ॥ २५ ॥ श्रीनन्दिकेश्वरउवाच ॥ भगवान् देवदेवेश लोकनाथ जगत् प्रते। भक्तोऽस्मि तवदासोऽस्मि प्रसादःक्रियतां मयि॥२६ देव्यास्तवमिमं पुन्यं दुर्लभं यत्सुरैरपि। श्रोतुमिच्छाम्यहं देव प्रभावमपिचास्यतु ॥२७॥ श्रीभगवानुवाच। शृणु नन्दिन् महाभागस्तवराजमिमंशुभम्। सहस्रैर्नामभिर्दिव्यैसिद्धिदं सुखमोक्षदम् ॥२८॥ शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः। त्रिकालं श्रद्धयायुक्तैर्नातः परतरःस्तवः ॥२९॥

ॐ अस्यश्री भवानीसहस्रनामस्तवराजस्य महादेवऋषिः, अनुष्टुप् छन्दः, आद्याशक्ति,भगवती भवानी देवता, ह्रीं बीजं श्रीं शक्तिः क्लीं कीलकं, आत्मनोवाङ्मन कायोपार्जितपापनिवारणपूर्वकं श्री भगवती जगदंबाप्रीत्यर्थं भवानीसहस्रश्रोत्रपाठे विनियोगः ॥ इति विनियोगः ॥

अथकरन्यासः—ॐ ह्रीं एकवीरायै अंगुष्ठाभ्यां

नमः । ॐ ह्रीं चण्डियोगीश्वरी महामायायै तर्जनी-भ्यांनमः । ॐ ह्रीं शर्वे भवान्यै मध्यामाभ्यां नमः । ॐ ह्रीं सर्वकामफलप्रदे गिरिशप्रियायै अनामिकाभ्यां नमः। ॐ ह्रीं सौभाग्यदायिनी गौर्य्यै कनिष्ठिकाभ्यां नमः । ॐ ह्रीं नमः करालिन्यै करतल करपृष्ठाभ्यां नमः ॥ इति करन्यासाः ॥

अथ हृदयन्यासः—ॐ ह्रीं एकवीरायै हृदयाय नमः ॥ ॐ ह्रीं चण्डियोगेश्वरी महामायायै शिरसे स्वाहा ॥ ॐ ह्रीं शर्वे भवान्यै शिखायै वषट् ॥ ॐ ह्रीं सर्वकामफलप्रदे गिरिशप्रियायै कवचाय हुम् ॥ ॐ ह्रीं सर्वसौभाग्यदायिनी गौर्य्यै नेत्रत्रयाय वौषट् ॥ ॐ ह्रीं नमः करालिन्यै अस्त्राय फट् ॥ ॥ इति हृदयन्यासः ॥

मूल मत्र—ॐ ह्रीं एकवीरायै चण्डियोगेश्वरि शर्वेभवानि सर्वकामफलप्रदे सर्वसौभाग्यदायिनि गिरीशप्रियायै ह्रीं नमः ॐ श्रीं ३ ॐ ह्रीं ३ ॐ श्रीं ३ भवानिहुँफट् स्वाहा ॥ अनेन मूलेन प्राणायामत्रयं कुर्यात् ॥

अथ ध्यानम्—बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ॥ पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे ॥१॥ अर्धेन्दु मौलिममल ।ममराभिवन्द्यामंभोजपाशसृणिरक्तकपालहस्ताम्॥ रक्ताङ्गरागरशनाभरणं त्रिनेत्रांध्यायेशिवस्य वनितां मदविह्वलाङ्गीम् ॥ २ ॥ ॐ बीजत्रयाय विद्महे तत् प्रधानाय धीमहि तन्नः शक्तिः प्रचोदयात् ॥

ॐ श्री ईश्वर उवाच ॥ ॐ महाविद्या जगन्माता महालक्ष्मी शिवप्रिया । विष्णुमाया शुभाशांता सिद्धा-सिद्धसरस्वती ॥१॥ क्षमाकान्तिः प्रभाज्योत्स्ना पार्वतीसर्वमङ्गला । हिंगुलाचण्डिका दांता पद्मा लक्ष्मी हरिप्रिया॥२॥ त्रिपुरानन्दिनी नन्दा सुनन्दा सुरवन्दिता यज्ञविद्या महामाया वेदमाता सुधाधृतिः ॥३॥ प्रीतिप्रिया प्रसिद्धाच मृडानी विंध्यवासिनी । सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता ॥ ४ ॥ पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना । प्रह्लादिनी महामाता दुर्गा

दुर्गतिनाशिनी ॥ ५ ॥ ज्वालामुखी सुगोत्राच
ज्योतिः कुमुदहासिनी । दुर्गमा दुर्लभाविद्या
स्वर्गतिः पुरवासिनी ॥६॥ अपर्णा शांबरी माया
मदिरा मृदुहासिनी । कुलवागीश्वरी नित्या नित्य
क्लिन्नाकृशोदरी ॥ ७ ॥ कामेश्वरी च नीलाच
भीरुण्डा वह्निवासिनी । लम्बोदरी महाकाली विद्या
विद्येश्वरी तथा ॥८॥ नरेश्वरी च सत्या च सर्व-
सौभाग्यवर्धिनी । सङ्कर्षिणी नारसिंही वैष्णवी च
महोदरी ॥९॥ कात्यायनी च चंपा च सर्वसम्पत्ति
कारिणी । नारायणी महानिद्रा योगनिद्रा प्रभावती
१०॥प्रज्ञा पारमिता प्रज्ञा तारा मधुमतीमधु । क्षीरा-
र्णवसुता हाला कालिका सिंहवाहिनी॥११॥ओंका-
राच सुधाहारा चेतना कोपनाकृतिः । अर्धबिन्दुधरा
धीरा विश्वमाता कलावती ॥१२॥ पद्मावती सुव-
स्त्रा च प्रबद्धा च सरस्वती । कुण्डासना जगद्धात्री
बुद्धमाता जिनेश्वरी ॥१३॥ जिनमाता जिनेन्द्रा च
शारदा हंसवाहना । राज्यलक्ष्मी वषट्कारा सुधा-

कारा सुधात्मिका ॥ १४ ॥ राजनीतिस्त्रयीवार्त्ता दण्डनीतिः क्रियावती । सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा ॥ १५ ॥ सिन्धुर्मंदाकिनी गङ्गा यमुना च सरस्वती । गोदावरी विपाशा च कावेरी च शतह्रदा ॥ १६ ॥ सरयूश्चन्द्रभागा च कौशिकी गंडकी शुचिः । नर्मदा कर्मनाशा च चर्मण्वत्यथ देविका ॥ १७ ॥ वेत्रवती वितस्ता च वरदा नरवाहना । सती पतिव्रता साध्वी सुचक्षुः कुंडवासिनी ॥ १८ ॥ एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी । सेनाश्रेणिः पताका च सुव्यूहा युद्धकांक्षिणी ॥ १९ ॥ पताकिनी दयारंभा विपंची पञ्चमप्रिया । परापरकलाकान्ता पञ्चमप्रिया । परापरकलाकांता त्रिशक्तिर्मोक्षदायिनी ॥ २० ॥ ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी इच्छा भगवती शक्तिः कामधेनुः कृपावती ॥ २१ ॥ वज्रायुधा वज्रहस्ता चंडी चंड पराक्रमा गौरीसुवर्णवर्णा च स्थितिः संहार कारिणी ॥ २२ ॥ एकानेका महेज्या च शतबाहुर्महा-

भुजंगभूषणाभूषा षट्चक्रक्रमवासिनी ॥ २३ ॥
षट्चक्रभेदिनी श्यामा कायस्थाकायवर्जिता ।
सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी ॥२४॥
अजा च बहुवर्णा च पुरुषार्थप्रवर्त्तिनी रक्तानीला
सिताश्यामा कृष्णपीता च कर्बुरा ॥ २५ ॥
क्षुधा तृष्णा जरा वृद्धा तरुणी करुणालया कलाका-
ष्ठामुहूर्त्ता च निमषा कालरूपिणी ॥२६॥ सुवर्ण-
रसनानासा चक्षुः स्पर्शवतीरसा गंधप्रिया सुगंधा
च सुस्पर्शा च मनोगतिः ॥२७॥ मृगनाभिमृंगा-
क्षी च कर्पूरामोदधारिणी पद्मयोनिः सुकेशी च
सुलिंगाभगरूपिणी ॥ २८ ॥ योनिमुद्रा महामुद्रा-
खेचरी खगगामिनी मधुश्रीर्माधवीवल्ली मधुमत्ता
मदोद्धता ॥२९॥ मातंगीशुकहस्ता च पुष्पबाणे-
क्षुचापिनी रक्तांबरधराक्षीबा रक्तपुष्पावतंसिनी
॥३०॥ शुभ्रांबरधराधीरा महाश्वेतावसुप्रियासुवेणी
पद्महस्ता च मुक्ताहारविभूषणा ॥३१॥ कर्पूरामोद
निश्वासा पद्मिनी पद्ममंदिरा खड्गिनी चक्रहस्ता च

भुशुंडी परिघायुधा ॥ ३२ ॥ चापिनी पाशहस्ता
च त्रिशूलवरधारिणी । सुबाणाशक्तिहस्ता च
मयूरवरवाहना ॥३३॥ वरायुधधरावीर वीरपानम-
दोत्कटा। वसुधा वसुधारा च जया शाकंभरी शिवा
॥ ३४ ॥ विजया च जयन्ती च सुस्तनीशत्रुना-
शिनी अन्तर्वर्त्नी वेदशक्तिर्वदा वरधारिणी॥३५॥
शीतलाचसुशीला च बालग्रहविनाशिनी कुमारी-
वसुपर्णा च कामाख्या कामवन्दिता ॥३६॥ जालं-
धरधरानन्ता कामरूपनिवासिनी। कामबीजवती-
सत्या सत्यधर्मपरायणा ॥३७॥ स्थूलमार्गस्थिता-
सूक्ष्मा सूक्ष्मबुद्धिः प्रबोधिनी षट्कोणा च त्रिकोणा
च त्रिनेत्रा वृषभध्वजा ॥ ३८॥ वृषप्रिया वृषारूढा
महिषासुरघातिनी।शुंभदर्पहरा दीप्तादीप्तपावकस-
न्निभा ॥३९॥ कपालभूषणा काली कपालमाला-
धारिणी । कपालकुंडलादीर्घा शिवदूती घन-
ध्वनिः॥४०॥सिद्धिदा बुद्धिदा नित्या सन्मार्गप्रति-
बोधिनी । कंबुग्रीवा सुमतिः छत्रछायाकृतालया

॥४१॥ जगदगर्भाकुंडलिनी भुजगाकारशायिनी
मूलाधारा निराकारा वह्निकुंडकृतालया ॥ ४२ ॥
वायु कुंडसुखासीना निराधारा निराश्रया । श्वा-
सोछ्वासगतिर्जीवा ग्राहिणिवह्निसंश्रया ॥४३॥
वल्लीतन्तु समुत्थाना षड्रसास्वादलोलुपा ।
तपस्विनीतपः सिद्धिस्तपसः सिद्धिदायिनी॥४४॥
तपोनिष्ठा तपोयुक्ता तापसी च तपःप्रिया । सप्त-
धातुमयींमूर्त्तिः सप्तधात्वंतराश्रया ॥४५॥ देहपुष्टि-
र्मनःपुष्टिरन्नपुष्टिर्बलोद्धता । औषधिर्वैद्यमाता च
द्रव्यशक्तिःप्रभावती॥४६॥ वैद्याभेद्य चिकित्सा
च सुपथ्या रोगनाशिनी मृगयामृगमांसादा मृग-
त्वङ्मृगलोचना ॥४७॥ वागुरा बन्धुरूपा च वध-
रूपा वधोद्धता वन्दीवन्दिस्तुताकारा कारावन्धवि-
मोचिनी ॥४८॥ शृङ्खला खलहाविद्युत् दृढबन्ध
बिमोचिनी ॥ अंबिका अम्बालिका चांबा स्वच्छा
साधुजनार्चिता ॥४९॥ कौलिकी कलविद्या च
सुकुला कुलपूजिता कचालकभ्रमाभ्रांता विभ्रमा

भ्रमनाशिनी ॥५०॥ वात्याली मेघमाला चसुवृष्टिः सस्यवर्धिनी अकारा च इकाराच उकारैकाररूपिणी ॥५१॥ ह्रींकारी बीजरुपा च क्लींकारांबरवासिनी । सर्वाक्षरमयी मूर्तिरक्षरावर्णमालिनी ॥ ५२ ॥ सिन्दूरारुणवर्णा च सिन्दूरतिलकप्रिया । वश्या च वश्यबीजा च लोकवश्यविभाविनी ॥५३॥ नृपवश्या नृपसेव्या नृपवश्यकरीप्रिया महिषी नृपमन्या च नृमान्या नृपनन्दिनी ॥४५॥ नृपधर्ममयीधन्या धन धान्याविवर्धिनीचतुर्वर्णमयीमूर्त्तिश्चतुर्वर्णैः सुपूजिता ॥५६॥ सर्वधर्ममयीसिद्धिश्चतुराश्रमवासिनी ब्राह्मणी क्षत्रिया वैश्याशूद्राचावरवर्णजा ॥५६॥ वेदमार्गरत्ता यज्ञा वेदविश्वविभाविनी अस्त्रशस्त्रमयी विद्या वर शस्त्रास्त्रधारिणी ॥५७॥ सुमेधा सत्यमेधा च भद्रका-ल्यपराजिता । गायत्री सत्कृतिः संध्या सावित्री त्रिपदाश्रया ॥५८॥ त्रिसंध्या त्रिपदी धात्री सुपर्वा सामगायिनी पांचाली बालिकाबाला बालक्रीड़ास नातनी ॥५९॥ गर्भाधारधरा शून्या गर्भाशयनिवा

सिनीसुरारिघातिनीकृत्यापूतनातिलोत्तमा ॥६१॥
लज्जा रसवती नन्दा भवानीपयानाशिनी। पटटां:
बरधरागीतिः सुगीतज्ञानलोचना ॥६२॥ सप्तस्वर
मयी तंत्री षड्जमध्यमदैवता मूर्छनाग्रामसंस्थाना
स्वच्छस्वस्थानवासिनी ॥६३॥ अट्टाटहासिनी
प्रेता प्रेतासननिवासिनी गीतनृत्यप्रियाकामातुष्टिदा
पुष्टिदाक्षया॥६४॥निष्ठासत्याप्रिया प्रख्या लोकेशी
चसुरोत्तमा सुबिषा ज्वालिनी ज्वाला विषमोहार्त्ति
नाशिनी ॥६५॥ विषारिर्नागदमनी कुरुकुल्लाऽ
मृतोद्भवा भूतभीतिहरा रक्षा भूतावेशविनाशिनी
॥६६॥ रक्षोघ्नी राक्षसीरात्रिर्दीर्घनिद्रादिवागतिः
चन्द्रिकाचन्द्रकान्तिश्च सूर्यकांत्तिर्निशाचरी ॥६७॥
॥१४॥डाकिनीशाकिनीशिष्या हाकिनीचक्रवाकिनी
सितासितप्रियास्वंगा सुकुलाव नदेवता ॥६८॥
गुरुरूपधरागुर्वी मृत्युर्मारीविशारदा महामारीविनि
द्रा च तन्द्रामृत्युविनाशिनी ॥६९॥ चंद्रमंडल
संकाशा चंद्रमंडलवासिनी। अणिमादिगुणोपेता

सुस्पृहा कामरूपिणी ॥७०॥ अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ।अनादिनिधना पुष्टिश्चतुर्बाहुश्चतुर्मुखी ॥७१॥ चतुःसमुद्रशयना चतुर्वर्गफलप्रदा काशपुष्पप्रतीकाशा शरत्कुमुदलोचना ॥७२॥ भूता भव्या भविष्या च शैलजा शैलवासिनी वामभागरता वामा शिववामभागवासिनी ॥७३॥ वामाचार प्रिया तुष्टिर्लोपामुद्राप्रबोधिनी भूतात्मा परमात्मा च भूतभव्यविभाविनी ॥७४॥ मंगला साधुशीलाच परमार्थप्रबोधिका दक्षिणा दक्षिणामूर्त्तिःसुदक्षिणा हरिःप्रिया ॥७५॥ योगिनी योगयुक्ता च योगांगा ध्यानशालिनी योगपट्टधरा मुक्ता मुक्तानां परमा-गतिः ॥७६॥ नारसिंही सुजन्माच त्रिवर्गफलदा--यिनी धर्मदा धनदा चैका कामदा मोक्षदा द्युतिः ॥ ॥७७॥ साक्षिणी क्षणदा दक्षादक्षजा कोटिरूपिणी-क्रतुः कात्यायनी स्वच्छास्वच्छन्दा च कविप्रिया ॥७८। सत्यागमा बहिस्थाच काव्यशक्ति कवित्वदा मेनापुत्री सतीमाता मैनाकभगिनी तटित् ॥७९॥

सौदामिनी सुदामा च सुधामाधामशालिनी ।
सौभाग्य दायिनी द्यौश्च सुभगा द्युतिवर्धिनी॥८०॥
श्री कृत्तिवसना चैव कंकाली कलिनाशिनी॥रक्तबीज
तथोटष्टा सुतन्तुर्बीजसंततिः ॥८१॥ जगज्जीवा जग
द्बीजा जगत्रयहितैषिणी । चामीकररुचिश्चांद्री साक्ष
या षोडशीकला॥८२॥यत्तद्पदानुबन्धा च यक्षिणी
धनदार्चिता । चित्रिणी चित्रमाया च विचित्राभु वने
श्वरी॥८३॥ चामुंडा मुंडहस्ता चंडमुंडवधोद्धरा ।
अष्टम्ये का शीपूर्णा नवमी च चतुर्दशी॥८४॥अमा-
कलशहस्तच पूर्णकुंभपयोधराअभीरुर्भैरवीभीराभीमा
त्रिपुरभैरवी ॥८५॥ महारुंडा च रौद्रीचैंमहाभैरव-
पूजिता । निमुंडाहस्तिनी चंडा करालदशनानना
॥२६॥ कराला विकराला च घोरा घुर्घुरनादिनी।
रक्तदंतोर्ध्वकेशी च बन्धूककुसुमारुणा ॥८७॥
कादंबरीपटासा च काश्मीरीकुंकुमप्रिया क्षांति
र्बहुसुवर्णाच मतिर्बहुसुवर्णदा ॥८८॥ मातंगिनीवरा
रोहा मत्तमातंगगामिनी ।हंसाहंसगति हंसी हंसो

ज्वल शिरोरुहा ॥८९॥ पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुंतला । मषी च लेखनी लेखा सुलेखा लेखकप्रिया ॥९०॥ शंखिनी शंखहस्ता च जलस्था जलदेवता कुरुक्षेत्रावनिःकाशी मधुराकांच्यवन्तिका॥९१॥अयोध्या द्वारिकामायातीर्था तीर्थकरप्रिया त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी ॥९२॥कौशिकीच कुशावर्ताकुशांबी कोशवर्धिनी कोशदा पद्मकोशाक्षी कुसुंभकुसुमप्रिया॥९३॥तोतला-चतुलाकोटिःकोटिस्था कोटराश्रया स्वयंभूश्च सुगुप्ता-चसुरुपारुपवर्धिनी ॥९४॥ तेजस्विनीसुभिक्षाच बलदा बलदायिनी । महाकोशी महावर्त्ता बुद्धिः सदसदात्मिका ॥९५॥ महाग्रहहरासौम्या विशोकाशोक नाशिनी । सात्विकी सत्यसंस्थाच राजसीचरजोवृता॥९६॥तामसीच तमोयुक्ता गुणत्रयविभाविनी । अव्यक्ताव्यक्तरूपा च वेदविद्या च शांभवी ॥५७॥ शंभुकल्याणिनी कल्पा मनः संकल्पसंततिः । सर्वलोकमयी शक्तिः सर्व-

श्रवणगोचरा ॥९८॥ सर्वज्ञानवती वाञ्छा सर्व तत्वा-व बोधिनी जाग्रता सुषुप्तिश्च स्वप्नावस्थातु रीयका ॥९९॥त्वरामंदगतिर्मंदामदिरामोदधारिणी पानभूमिः पानपात्रा पानदान करोद्यता ॥१००॥ अघूर्णा-रुणनेत्रा च किंछिदव्यक्तभाषिणी आशापू रा च दीक्षा च दक्षादीक्षितपूजिता॥१०१॥नागव ल्ली नागकन्या भोगिनीभोगवल्लभा सर्वशास्त्र वती विद्या सुरस्मृतिर्धर्मवादिनी ॥१०२॥ श्रुतिः श्रुतिधराज्येष्ठा श्रेष्ठा पातालवासिनी मीमांसा तर्कविद्या च सुभक्तिर्भक्तसला ॥१०३॥ सुनाभि र्यातनाजातिगंभीराभाववर्जिता नागपाशधरामूर्त्ति- -रगाथा नागकुंडला॥१०४॥सुचक्रा चक्रमध्यस्था चक्र-कोणनिवासिनी ॥ सर्व मंत्रमयी विद्या सर्व मंत्राक्षरावलिः॥१०५॥मधुस्त्रवा स्त्रवंती च भ्रामरी कुमारभ्रमरालका मातृमंडल मध्यस्था मात्र मंडल वासिनी ॥१०६॥ जननीक्रूरा सुमुख ज्वर- नाशिनी अतीता विद्यामाना च भाविनी प्रीतिमंज ॥१०७॥ सर्वसोख्यवतीयुक्ति राहार

परिणामिनी ॥ निधानं पंचभूतानां भवसागरतारि
णी ॥ १०८॥ अक्रूराचग्रहवती विग्रहाग्रहवर्जिता
रोहिणीभूमिगर्भाच कालभूः कालवर्जिता ॥१०६
कलंकरहिता नारी चतुषष्ठ्यभिधावती ॥ जीर्णाच
वस्त्रा नूतनानर्वबल्लभा ॥११०॥ अजरा नियतिः
प्रीति रतिरागविर्धिनी ॥ पंचवातगतेर्भिन्ना
पंचश्लेष्माश्रयाधरा ॥ १११ ॥ पंचपित्तवती
पंक्तिः पंचस्थानविभाविनी ॥ ऋतुमतीकामवती
बहिः प्रस्रविणी त्र्यहा॥११२॥रजः शुक्रधराशक्तिः
जरायुर्गर्भधारिणी त्रिकालज्ञात्रिलिंगाच त्रिमूर्तिः
पुरवासिनी॥११३॥ अरागा शिवतत्वा चकामत
त्वानुसारिणी प्राच्यवाची प्रतीचीदिगुदीचीदिगवि-
दिग्दिशा ॥११४॥

अहंकृतिरहंकारा बलिमाया बलिप्रिया ॥ स्रुक-
स्रुवा सामधे नीचसुश्रद्धा श्राद्ध देवता ॥११५॥
मातामातामहीतृप्तिः पितृमाता पितामही॥ स्नुषादौ
हितृणी पुत्री पौत्री नप्त्रीशिशुप्रिया॥११६॥स्तनदा

स्तनधां राच विश्वयोनिः स्तनंधयी ॥ शिशूत्संग
धरादोला दोला क्रीडा भिनन्दिनी ॥११७॥
उर्वशी कदली केका विशिखा शिखिनर्त्तिनी ॥
खट्वांगधारिणी ॥ खट्वं बाणपुंखानुवर्त्तिनी
॥११८॥ लक्ष्यप्राप्तिः काल लब्ध्या लब्धयाचशुभ
लक्षणा ॥ वर्त्तिनी सुपथाचारा परिघाचखनिवृत्तिः
॥११९॥ प्राकारवलया वेला मर्यादा च महोदधौ॥
पोषणीशोषणी शक्तिः दीर्घकेशी सुलोमशा
॥१२०॥ ललितामांसला तंन्वी वेदवेदांगधारिणी
॥ नरासृकपानमंत्ता च नरमुंडास्थिभूषण ॥१२१॥
अक्षः क्रीडारतिः शारी शारिका शुकभाषिणी
शांवरी गारुडीविद्या वारुणी वरुणार्चिता ॥१२२॥
वाराही मुंडहस्ताच दंष्ट्रोध्दृतवसुंधरामीनमूर्तिर्धरा
मूर्त्ताब्दान्या प्रतिभाश्रया ॥१२३॥ अष्टमूर्तिर्निधी
शा च शालिग्रामशिलाश्रुतिः ॥ स्मृतिः संस्काररु
रुपाचसुसंस्कारा च संस्कृतिः ॥१२४॥ प्राकृता देश
भाषा च गाथागीतिः प्रहेलिका इडा च पिंगलापिंगा

सुषुम्ना सूर्यवाहिनी १२५॥ शशिस्रवा च तालुस्था काकिनी मृतजीवनी ॥ अणुरूपा बृहद्रूपा लघुरूपा गुरुः स्थिरा ॥१२६॥ स्थावरा जंगमा देवी कृतकर्म फलप्रदा॥ विषयाक्रांत देहा च निर्विशेषा जितेन्द्रिया ॥१२७॥ विश्वरुपा चिदानन्दा परंब्रह्मप्रबोधिनी ॥निर्विकारा च निर्वैरा विरतिः सत्ववर्धिनी॥१२८॥ पुरुषा ज्ञानभिन्ना च क्षांतिः कैवल्य दायिनी विविक्त सेविनिप्रह्वा जनयित्री बहुश्रुतिः ॥१२९॥ निरीहा च समस्तेहा सर्वलोकैक सेविता सेवा सेवाप्रिया सेव्या सेवाफलवि वर्धिनी ॥१३०॥ कलौकल्किप्रियाकाली दुष्टम्लेच्छ विनाशिनी ॥ प्रत्यञ्चाच धनुर्यष्टिः खड्गधारा दुरानति ॥१३१॥ अश्वप्लु तिश्चवल्गाच सृणिः सन्मत्तवारणा वीरभूवीर माता च वीरसूवीरनन्दिनी॥१३२॥जयश्रीर्जयदीक्षा च जयस्था जयवर्धिनी ॥ सौभाग्य सुभगाकारा सर्वसौभाग्यवर्धिनी ॥१३३॥ क्षेमकरीसिद्धिरुपासत् कीर्तिः पथिदेवता सर्वतीर्थमयी मूर्तिः सर्वदेवमयीप्रभा

सर्वं सिद्धि प्रदाशक्तिः सर्वमंगल मंगला ॥१३४॥
पर पुण्यं सहस्र नामेदमंबायाश्चभाषितम् चतुर्वर्गं
प्रदंसत्यं नन्दिकेन प्रकाशितम् ॥ १३५ ॥ नातः
तरोमंत्रो नातः प तरः स्तवः नातः परतरा विद्या
तीर्थंनातः परं परम ॥१३६॥ तेधन्या कृतपुण्यास्ते
तरावभुविपूजिता एकभावं मुदानित्यं येऽर्चयंतीं-
महेश्वरीम् ॥१३७॥ देवतानां देवताया ब्रह्माद्यै र्याच-
पूजिता भूयात् सा वरदा लोके साधूनाविश्वमंगला
॥ १३८ ॥ एतामेवपुराराध्य विद्यां त्रिपुरभैरवीम्
त्रैलोक्य मोहनं रुपमकार्षीद् भगवान हरिः
॥१३९॥यः पठेत् प्रातरुत्थाय शुचिर्भूत्वा समाहितः
यश्चापिशृणुयन्नित्यं नरोनिश्चल मानसः ॥१४०॥
एककालं द्विकालं वा त्रिकाल श्रद्धयान्वितः सर्वदुःख
विनिर्मुक्तो लोभः क्रोधविवार्जितः ॥ १४१ ॥
तेजस्वी बलवान शूरः शोक रोगविरर्जितः यशस्वी
कीर्तिमान् धन्यः सुभगो लोक पूजितः ॥१४२॥ रूप-
वान् गुणसंपन्नः प्रभावीर्य समन्वितः श्रेयांसि लभते

नित्यं निश्चलां च शुभां श्रियम् ॥१४३॥ सर्वपापविनि
मुक्तो काममोहविवर्जितः नित्यं बन्धुसुतादारापुत्रपौत्र
महोत्सवः॥१४४॥ नन्दितः सेवितो भृत्यैर्बहुभिः शुचि-
मानसैः विद्यानां पारगोविप्रः क्षत्रिनो विजयीरणे॥१४५॥
वैश्यस्तु धनलाभाढ्यः शूद्रः सुखमवान्पुयात पुत्रार्थी
लभते पुत्रान धनार्थी विपुलं धनम् ॥१४६॥ इच्छा
कामंतु कामार्थी धर्मार्थी धर्म मक्षयम् कन्यार्थी लभते
कन्यां रूप शील गुणान्विताम् ॥१४७॥ क्षेत्रम् च
बहुसस्यं स्यात गावस्तु बहुदुग्धदा नाशुभं नाभयं
तस्य न भयं नपशत्रु तः ॥१४८॥ अष्टम्यां वा चतुर्द
श्यां नवम्यां चैकचेतसः येपठन्ति सदा मर्त्या न ते वै
दुःख भाजनाः ॥१४९॥ नवरात्रं यताहारो दृढ भक्ति
जितेन्द्रियः चन्डिकायतने विद्वान शुचिष्मान् मूर्त्ति
सन्निधौ ॥१५०॥ एकाकी तु शतावर्त्तैः पठन धीर
श्चनिर्भयः साक्षात् भगवती तस्मै प्रयच्छेदीप्सितं फलम्
॥१५१॥ सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये पठ-
नात् साधकस्याशु सिद्धिर्भवति वाञ्छिता ॥१५२॥

दशावर्त्त पठेद्यस्तु भूमिशायी नरः शुचिः स्वप्ने मूर्ति मतीं देवीं वरदां सोऽपिपश्यति ॥१५३॥ आवर्त्तन सहस्रेण पठन्ति पुरुषोत्तमाः ते सिद्धाः सिद्धिदा लोके शापानु ग्रहणे क्षमाः ॥१५४॥ रोचनालिखितं भूर्जे कुंकुमेन शुभे दिने धारयान्यंत्रितं देहे पूजयित्वा कुमारिकाः॥१५५॥सर्व बाधासुघोरासु सर्वदुःखनिवारणं सर्वमंगलकृत स्वर्ग्यं पठितव्यं समाहितैः ॥१५६॥ श्रोतव्यं च सदाभक्तापरं स्वस्त्ययनं महत् ॥ पुण्यं सहस्रनामेद मंबायारुद्र भाषितम् ॥१५७॥ इति रुद्र-यामले तंत्रे नन्दिकेश्वर संवादे भवानी सहस्रनाम स्तोत्रम् समाप्तम् ॥ जप्तं पापहरं नतं बलकरं संपू-जितं श्रीकरं ध्यातं मानकरं स्तुतं धनकरं संभाषितं सिद्धिदम् ॥ गीतं सुन्दरिवांछितं प्रतनुते तेपाद पद्मद्वयं भक्तानां भवभीति भंजन करं सिद्धिप्रदं पातु नः ॥१॥ मायाकुण्डलिनी क्रिया मधुमती काली कला-मालिनी मातंगी विजया जया भगवती देवी शिवा संभवी ॥ शक्तिः शंकर वल्लभा त्रिनयनी वाग्वादिनी

भैरवी ह्रींकारी त्रिपुरा परात्परमयी माताकुमारीति सा ॥२॥ इति तर्पणं कुर्य्यात् ॥

सुन्दरी भैरवी काली तारा ब्राह्मी च वैष्णवी अर्चिता तुलसी पत्रैः सर्वकामः प्रसिध्यति ॥ तुलसी विल्वपत्रैश्च धात्री पत्रैश्चयोऽर्चयेत् सर्वकामान वाप्नोति सत्यमेव न संशयः ॥

❀:❀:❀

## ॥ अथ विन्ध्येश्वरी स्तोत्रम् ॥

निशुम्भशुम्भ तर्जनी, प्रचण्ड मुण्ड खण्डिनी ।
वने प्रणेप्रकाशिनीं, भजामिविन्ध्यवासिनीम् ॥१॥
त्रिशूल मुण्डधारिणी, धराविघातहारिणीम् ।
गृहे गृहे निवासिनीं, भजामि विन्ध्यवासिनीम् ॥२॥
दरिद्र दुःख हारिणीं, सतीं विभूतिकारिणीम् ।
वियोगशोकहारिणी, भजामिविन्ध्यवासिनीम् ॥३॥
लसत्सरोज लोचनां, ललासदम्बरप्रदां ।
कपाल शूलधारिणी, भजामि विन्ध्यवासिनीम् ॥४॥

करे मुदागदाधारी शिवाशिवः प्रदायिनी ।
वरानने शुभां करीं भजामिविन्ध्यवासिनी ॥५॥
ऋषीन्द्र जामिनीप्रदां त्रिधास्य रूपधारिणीं ।
जल थले निवासिनीं, भजामि विन्ध्यवासिनीं ॥६॥
विशिष्टशिष्ट कारिणीं विशालरूपधारिणीम् ।
महोदरे विलासिनी; भजामि विन्ध्यवासिनीं ॥७॥
पुरन्दरादि सेवितां, पुरादिवंशखंडितां ।
विशुद्ध बुद्धिकारिणीं, भजामि विन्ध्यवासिनीं ॥८॥

॥ इति श्रीविन्ध्येवरी स्तोत्रम् ॥

❀❀❀

॥ अथ देव्यपराधक्षमागनस्तोत्र प्रारम्भः ॥

न मंत्रं नो यंत्रं तदपि न च जानेस्तुतिमहो ।
न चाहवान ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जानेविलपनं ।
परं जाने मातस्त्वदनुशरणं क्लेशहरणम् ॥१॥

विधेरज्ञानेन द्रविणाविरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत्‌ ।
तदेतत्क्षन्यव्य जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥
पृथिव्यां तुत्रास्ते जननिबहवः संति सरलाः
पर तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागःसमुचितमिद नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥
जगंमातर्मातस्तव चरण सेवा न रचित
न वा दत्तं देवि द्रविणमपि भूयस्तवमया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्यचिदपि कुमाता न भवति ॥४॥
परित्यक्ता देवा विविधविधिसेवाकुलतया
मया पंचाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेंमातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि कं यामि शरणम्‌ ॥५॥

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिर कोटिककनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिद
जनः को जानीते जननि जपनीयं जपविधौ ॥६॥

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥७॥

न मोक्षस्याकांक्षा भवविभववांछापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥८॥

नाराधितासि विधिना विविधोप चारैः
किं रूक्षचिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किंचन मयः नाथे
धत्से कृपामुचितमम्बपरं तवव ॥९॥

आपत्सु मग्नः स्मरणम् त्वदीय
करोमि दुर्गे करुणार्णवेशि ।
नैतच्छठत्वं मम भावयेथाः
क्षुधातृषार्ता जननीं स्मरन्ति ॥१०॥
जगदम्बा विचित्रमंत्र किं परिपूर्णा करुणास्तिचेन्मयि ।
अपराधपरम्परावृतं न हि माता समुपेक्षते सुतं ॥११॥
मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥१२॥

इति देव्यपराधक्षमापन स्तोत्रम् सम्पूर्णम् ।

# श्री महालक्ष्म्यष्टकम्

इन्द्र उवाच

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥१॥
नमस्ते गरुड़ारूढे कोलासुरभयङ्करि ।
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥२॥
सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि ।
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते ॥३॥

सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनी ।
मन्त्रपूते सदा देवि महालक्ष्मि नमोऽस्तु ते ॥४॥
आद्यन्तरहिते देवि आद्यशक्तिमहेश्वरि ।
योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते ॥५॥
स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे ।
महापापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥६॥
पद्मासनस्थिते देवि परब्रह्मस्वरूपिणी ।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥७॥
श्वेताम्बरधरे देवि नानालंकारभूषिते ।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोस्तु ते ॥८॥
महालक्ष्यम्यष्टकंस्तोत्र यः पठेद् भक्तिमान्नरः ।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥९॥
एककाले पठेन्नित्यं महापापविनाशनम्
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वित ॥१०॥
त्रिकालं यः पठेन्नित्यं महाशत्रु विनाशनम् ।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥११॥

इतीन्द्रकृत महालक्ष्म्यष्टकं सम्पूर्णम् ।

# भवान्याष्टकम्

न तातो न माता न वन्धुर्न दाता
न पुत्रो न पुत्री न भृत्यो न भर्ता ।
न जाया न विद्या न वृत्तिर्ममैव
गतिस्त्वं गतिस्त्वं त्वमेका भवानि ॥१॥
भवाब्धावपारे महादुःखभीरुः
पपात प्रकामी प्रलोभी प्रमत्तः ।
कुसंसारपाशप्रवद्धः सदाहम् गतिस्त्वम् ॥२॥
न जनामि दानं न च ध्यानयं गं
न जानामि तन्त्रं न च स्तोत्रमन्त्रं ।
न जानामि पूजां न च न्यासयोगम् गतिस्त्वं ॥३॥
न जानामि पुण्यं न जानमि तीर्थं
न जानामि मुक्तिं लयं वा कदाचित् ।
न जानामि भक्तिं व्रतं वापि मातर्गतिस्त्वम् ॥४॥
कुकर्मी कुसङ्गी कुबुद्धिः कुदासः
कुलाचारहीनः कदाचारलीनः ।
कुदृष्टिः कुवाक्यप्रबन्धः सदाहम् गतिस्त्वम् ॥५॥

प्रजेशं रमेशं महेशं सुरेशं
दिनेशं निशीथेश्वरम् वा कदाचित् ।
न जानामि चान्यत् सदाहं शरण्ये । गतिस्त्वम् ॥६॥
विवादे विषादे प्रमादे प्रवासे
जले चानले पर्वत शत्रुमध्ये ।
अरण्ये अरण्ये सदा मां प्रपाहि । गतिस्त्वम् ॥७॥
अनाथो दरिद्रो जरारोगयुक्तो
महाक्षीणदीनः सदा जाडयवक्त्रः ।
विपत्तौ प्रविष्टः प्रणष्टः सदाहम् । गतिस्त्वम् ॥८॥

इति श्री भवानयाष्टकं सम्पूर्णम्

# आरती अम्बा जी की

जय अम्बे गौरी मैया जय श्यामा गौरी ।
तुमको निशदिन ध्यावत हरि ब्रह्मा शिवरी ॥१॥
मांग सिंदूर विराजत टीको मृगमद को ।
उज्वल से दोउ नैना, चन्द्रबदन नीको ॥२॥
कनक समान कलेवर रक्ताम्बर राजे ।
रक्त पुष्प गल माला, कण्ठन पर साजै ॥३॥

केहरि वाहन राजत खड्ग खप्पर धारी ।
सुर नर मुनि जन सेवत, तिनके दुखहारी ॥४॥
कानन कुण्डल शोभित, नासाग्रे मोती ।
कोटिक चन्द्र दिवाकर, सम राजत ज्योती ॥५॥
शुम्भ निशुम्भ विदारे, महिषासुर-घाती ।
धूम्र विलोचन नैना, निशदिन मदमाती ॥६॥
चन्ड मुन्ड संहारे, शोभित बीज हरे ।
मधु कैटभ दोउ मारे, सुर भयहीन करे ॥७॥
ब्रह्मानी रुद्राणी, तुम कमला रानी ।
आगम निगम बखानी, तुम शिव पटरानी ॥८॥
चौंसठ योगिन गावत, नृत्य करत भैरूँ ।
बाजत ताल मृदङ्गा, और बाजत डमरूँ ॥९॥
तुमही जग की माता, तुमही हो भरता ।
भक्तन की दुःख हरता, सुख सम्पति करता ॥१०॥
भुजाचार अति शोभित वर मुद्रा धारी ।
मनवाञ्छित फल पावत, सेवत नर नारी ॥११॥

कञ्चन थाल विराजत, अगर कपूर बाती ।
(श्री) मालकेतु में राजत,कोटि रतन ज्योती ॥१२॥
(श्री) अम्बेजी की आरति जो कोई नर गावे ।
वह ज्ञान, सुबुद्धि, स्वामी सुख सम्पति पावे ॥१३॥

# आरती श्री दुर्गाजी की

मंगल की सेवा सुन मेरी देवा
हाथ जोड़ तेरे द्वार खड़े ।
बुद्धि विधाता तू जगमाता,
मेरा कारज सिद्ध करे ॥
पान सुपारी ध्वजा नारियल,
दुर्गा तेरी भेंट करे ।
तुम जगदम्बा कर न बिलम्बा,
सन्तन का भंडार भरे ॥
सन्तन प्रतिपाली सदा कुशाली,
जय काली कल्याणी करे ।

चरण कमल का दिया आसरा
शरण तुम्हरी आन परे ॥
जब जब भीड़ पड़ी भक्तन पर,
तब तब आय सहाय करे ।
बार बार सब जग मोह्यो,
तरुण रूप अनुरूप धरे ॥
माता होकर पुत्र खिलावे,
कहीं भार्या होकर भोग करे ।
संतन सुखदाई सदा साहाई,
सन्त खड़े जयकार करे ॥
ब्रह्मा बिष्णु महेश सहसफल,
लिये भेंट तेरे द्वार खड़े ।
अटल सिंहासन बैठी माता,
सिर सोने का छत्र धरे ॥
तेरे कमल मुख वरणी,
जब लाँगुर पर हुक्म करे ।

खंड़ खप्पर त्रिशूल हाथ लिये
रक्त बीज को भस्म करे ॥
शुम्भ निशुम्भ पछाड़े माता;
महिशासुर को पकड़ धरे ।
जय जननी जय मात भवानी,
अटल भवन में राज्य करे ॥

# आरती देवीजी की

दोहा— घड़ा भर गया पाप का, फैला अत्याचार ।
आसमान की छात्रिमा धरती कहे पुकार ॥
अम्बे तू है जगदम्बे काली, जय दुर्गे खप्पर वाली ।
तेरे ही गुण गावें भारती,
ओ मैया हम सब उतारें तेरी आरती ॥ १ ॥
तेरे जगत के भक्त जनो पर, भीर पड़ी है भारी ।
दानव दल पर टूट पड़ो, माँ करके सिंह सवारी ॥
सौ-सौ सिंघो की तू बलसाली, है दस भुजाओं वाली ।
दुष्टों को तू ही ललकारती,
ओ मैया हम सब उतारें तेरी आरती ॥ २ ॥

नहीं मांगते धन और दौलत, ना चाँदी ना सोना।
माँगें २ तेरे भवन में एक छोटा सा कोना,
सब पर करुणा दरशाने वाली, सबको हरषाने वाली।
सतियों के सत को संहारती,
ओ मैया हम सब उतारें तेरी आरती ॥ ३ ॥
माँ बेटे का है इस जग में, बड़ा ही निर्मल नाना।
पूत कपूत सुने हैं, पर न माता सुनी कुमाता,
सब पर करुणा दरसाने वाली, सबको हरषाने वाली।
नैया भंवर से उतारती,
ओ मैया हम सब उतारें तेरी आरती ॥ ४ ॥

❀❀❀



अग्रवाल प्रेस, मथुरा।

## भारत नवीन सिलाई शिक्षक

इस पुस्तक से कम पढ़े-लिखे पुरुष तथा स्त्रियां हर प्रकार के नये फेशनों के जनाना, मर्दाना व बच्चों के कपड़ों की कटाई व सिलाई करने के ढंग सीख कर पूरे टेलर मास्टर बन सकते हैं । क्योंकि इसमें सिलाई मशीन के प्रयोग से लेकर आधुनिकतम फैशन की स्त्री, पुरुष और बच्चों की विभिन्न पोशाकों की तैयारी के लिये अत्यन्त सरल ढंग से बोधगम्य चित्रों के साथ जो विवरण दिये हैं कदाचित हिन्दी क्षेत्र में अन्यन्त्र प्रकाशित पुस्तकों में नहीं मिलेंगे । प्रत्येक डायग्राम के साथ स्केल देकर पुस्तक को अत्यंत उपयोगी बना दिया है । आज ही अपना आर्डर भेजें और यह अनमोल पुस्तक मंगायें,बढ़िया कागज, बड़ा साइज सजिल्द का मूल्य ६)५० डाक खर्च अलग ।

## भोजन कला

इस पुस्तक में सभी प्रकार के देशी व विदेशी भोजन, मिठाइयां, नमकीन, अचार, मुरब्बा आदि बनाने के ढंग बताये गयें हैं। यह पुस्तक गुरु का काम देती है । बढिया कागज सजिल्द का मूल्य ४)०० डाक खर्च अलग ।

## डायमन्ड जन्त्री लकड़ी पेमायस

इसमें लकड़ी की पेमायस का खुलासा हाल दिया गया है जो बड़ी आसानी से समझ में आता है । सजिल्द का मूल्य १)५० मैट्रिक प्रणाली में छपी २)५० डाक खर्च अलग ।

हर प्रकार की पुस्तकें मिलने का पता--

**नव भारत पुस्तकालय मातागली, मथुरा. ( उ० प्र० )**

---

गुप्ता फाइन आर्ट प्रिन्टर्स, कृष्णापुरी, मथुरा।